

SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:11, Issue: 02
May 2024, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

मे - २०२४ रू. २०/-

## तिरुपतिस्थ श्रीगोविन्दराजस्वामिनः ब्रह्मोत्सवः

मे 2024 16 तः 24 पर्यन्तम्

श्रीक्रोधिनामसंवत्सरोउगादिपर्वदिनं पुरस्कृत्य (९-४-२०२४) तिरुमलश्रीस्वामिनः आलये, ति.ति.देवस्थाानस्य इतरेषु आलयेषु अपि आयोजितउगादिआस्थानउत्सवदृश्यानि।















ति.ति.दे. विद्या, वैद्य शाखयोः
नूतन-संयुक्त-कार्यनिर्वहणाधिकारी रूपेण
श्रीमति एम्.गौतमी ऐ.ए.एस्., नियुक्ता जाता।
एषा ९-४-२०२४ (नूतन वत्सरादि) दिनाङ्के
कार्यकालदायित्वं स्वीकृतवती।



# गीतामृतम्



श्रीभगवानुवाच -

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि।।

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना।।

(भगवद्गीता २.२७-२८)

श्रीभगवान् उवाच हे अर्जुन!

भावः - जन्मप्राप्तवतः मरणम् अवश्यं भविष्यति। मृतस्य जन्मापि अवश्यं भविष्यति। जन्म वा मरणं वा जीविना परिहर्तुमशक्यं भवति। एवम् अपरिहार्यं मरणं जन्म च उद्दिश्य न शोचनीयम्। यतः तद्द्वयमपि अपरिहार्यम्। पुत्रमित्रशरीरेन्द्रियादीनि भूतानि जन्मतः पूर्वं अदृश्यानि जन्मप्राप्तेः अनन्तरं दृश्यानि। मरणात् अवश्यं नाशं अदृश्यत प्राप्नुवन्ति। अतः तद्विषयेऽपि शोको न प्राप्तव्यः।

# सङ्कीर्तनम्

हरिरसमविहारी स तु
सरसोयं मम श्रमसंहारी ।।हरि।।

दयानिवृततनुधारी स
शयातिशयसञ्चारी
कयाप्यजितविकारी
क्रियामुखकृपाणधारी ।।हरि।।

सदा मिथ्याज्ञानी स तु
मदालिमताभिमानी
तदाश्रितसंधानी स तु
तदा तदा चिन्ताशयनानि ।।हरि।।

परामृतसम्पादी
स्थिरानन्दा स्वेदी
वरालापविवादी श्री
तिरुवेङ्कटगिरिदिव्यविनोदी ।।हरि।।

(अन्नमाचार्यसङ्कीर्तनम्)



# अन्नदानम्

अन्नं परब्रह्मस्वरूपमिति सनातनोक्तिः। सर्वेषां दानानां मध्ये अन्नदानं गरीयः। ये अन्नदानं कुर्वन्ति ते देवैरपि पूज्यमानाः भवन्ति। पुरुषार्थसाधनभूतस्य शरीरस्य प्राणधारणं स्वरूपं च अन्नेनैव सिध्यति। विना आहारं कोऽपि प्राणी जीवितुं न शक्नोति तेन अन्नदानं कुर्वाणाः प्राणदानं कृतवन्तः एव भवन्ति। ये प्राणान् ददति ते सर्वं दत्तवन्तः भवन्ति। आहारदानेन प्राणदानं, प्राणदानेन सर्वस्व - दानं कृतमेव भवति। अन्नं स्वीकृत्य ये जनाः यानि यानि पुण्यकार्याणि कुर्वन्ति। तैः प्राप्तस्य पुण्यस्य कश्चन भागः अन्नदानं कुर्वाणान् प्राप्नोति।

मानवसेवैव माधवसेवा इति माननीयानां उक्तिः। बुभुक्षितानाम् अन्नप्रदानद्वारा यज्ञफलमेव प्राप्नुवन्ति अन्नदातारः। नहि अन्नं दत्वेव अन्यत् दत्वा जीविनः वयं तर्पयितुं शक्नुमः। अन्नदातृभ्यः आहरं स्वीकृत-वन्तो जनाः एतत् पर्याप्तं वयं परिपूर्णतया तृप्ताः इति चिन्तयन्ति। अन्नस्वीकरेण भोक्तृभिः प्राप्यते तावती तृप्तिः अन्यस्वीकेरेण न प्राप्यते। यादृशी तृप्तिः अन्नदानेन दातृभिः त्रिषु लोकेषु कीर्तिः, धनं, बलं, प्राप्स्यन्ते। अन्नप्रदातृणामेव स्वर्गे प्रथमं स्थानम् इति आर्योक्तिः। इमां सूक्तिं ति.ति.देवस्थानानि मनसा वाचा कर्मणा आचरन्ति इति लोकविदितम्।

आलयेषु प्रसादादि विनियोगः क्रियमाणः अस्ति। प्रसादस्वीकारेण भक्तानां यथा ऐहिकम् आमुष्मिकं च फलं लभ्यते तथैव आलयसम्बन्धिनां जनानामपि ऐहिकामुष्मिका लाभौ लभ्येते। आलये प्रवर्तमानानाम् उत्सवानां मध्ये केचनोत्सवाः अन्नसन्तर्पणप्रधानाः भवन्ति। ति.ति.देवस्थानेषु आचर्यमाणः ''तिरुप्पावाड'' उत्सवः तादृश एव। तिरुमलक्षेत्रे भक्तानां बुभुक्षा परिपूर्त्यर्थं साळुव नरसिंहरायः बहूनि अन्नसत्राणि निर्मितवान्। ति.ति.देवस्थानां बहोः कालादारभ्य भक्तेभ्यः अन्नप्रदानद्वारा मानवसेवा-द्वारा माधवसेवामेव करोति।

अमुमेव सनातनसम्प्रदायम् अग्रे सारयत् ति.ति.देवस्थानं पवित्रमेतत् पुण्यकार्यम् 06-04-1985 तः आरभ्य एतावत् पर्यन्तम् अनुतिष्ठति। द्विसहस्रभक्तैः आरभ्य एतत् पथकं क्रमेण अतिविस्तृतिं प्रापत्। प्रारम्भ समये देवदर्शनं कृतवतामेव एतत् सौकर्यमासीत्। क्रमेण ये तिरुमलक्षेत्रमागच्छन्ति तेषां सर्वेषामपि आहारसन्तर्पणसेवा विस्तारिता भवति।

ति.ति.दे. पालकमण्डल्या नूतनानि अन्नदानभवनानि निर्मितानि। निर्मितानां च पूर्वं भक्तानां सर्वदा अन्नदानं कृतवत्याः तरिगोण्ड वेङ्गमाम्बायाः नाम स्थापितम्। अयं सदवकाशः विनुयुज्यतां भक्तैः इति भक्तजनाः निवेद्यन्ते।

।।अन्नं परब्रह्मस्वरूपम्।।

# मे -२०२४

सम्पुटिः-११ सञ्चिका-०२

श्रीक्रोधिसंवत्सरस्य चैत्रकृष्णअष्टमी तः

श्रीक्रोधिसंवत्सरस्य वैशाखकृष्णअष्टमी पर्यन्तम्-१९४४



मुखचित्रम् - तिरुपति श्रीगोविन्दराजस्वामिनः ब्रह्मोत्सवः।

अन्तिमरक्षापुटः - नारायणवनम् श्री कल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः।

## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.

दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९
सम्पादकः,
०८७७ - २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -

sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका





# तिरुपतिस्थतातय्यगुण्ट गङ्गम्म वैभवम्

तिरुपतिस्थ गङ्गम्मदेवतायाः चारित्रिकी पौराणिकी च प्रसिद्धिः अस्ति। अस्याः देवतायाः यात्रा (जातर) प्रतिवर्षं प्रचलति। अस्मिन् उत्सवे ति.ति.देवस्थानानि इमां देवतां प्रति शाट्यादि-मङ्गळ-वस्तूनि प्रेषयन्ति इति आचारः।

अस्याः देवतायाः उद्भवे सनातनी काचित कथा वर्तते। पुरा तिरुपतिः कुग्रामत्वेन आसीत्। तस्य पालकः कश्चित् आसीत्। सः अतीव क्रूरः। सर्वाः युवतयः विवाहानन्तरम् आदौ सुखानुभवं तस्मै राज्ञे दद्युः इति नियमः तेन पालकेन कृतः। अनेन पीड्यमानाः युवतयः गङ्गम्माम्बायै स्वीयदुःखं न्यवेदयन्। तदा सा देवतैव परिणीय सुखानुभव-प्रदान-व्याजेन तस्य क्रूरस्य समीपं गत्वा भद्रकाळीरूपं प्रदर्शितवती। भीतः सः पलायितः। तदा गङ्गम्माम्बा बहून् वेषान् धृत्वा तम् अन्विष्य अन्ते तातय्यगुण्टनामकप्रदेशे तं गृहीत्वा अहन्। तस्मिन् समये भक्ताः तां प्रार्थितवन्तः तातय्यगुण्टप्रदेशे एव स्थिरतया स्थातुम्। भक्ताः अपि तां देवतां मनसि निधाय बहूनि रूपाणि धृत्वा यात्रासमये तां सेवन्ते। इयं यात्रा तिरुपतिमध्ये एव भवति नान्यत्र कुत्रापि। यात्रोत्सवस्य समये भक्ताः बहूनि रूपाणि धृत्वा, वीथीषु चरन्तः निन्दा वाक्यानि उच्चैः भ्रमन्ति। अस्य आचारस्य अयं गर्भितार्थः। गङ्गम्मा दूषण-वाक्यानि उक्त्वैव पूर्वोक्तं क्रूरं पालकं कुत्रचित् स्थाने गुप्ततया स्थितं बहिरानीतवती। एवं महाभारते सरसि गुप्ततया स्थितं दुर्योधनं बहिरानेतुं निन्दावाक्यप्रयोगमेव भगवान् श्रीकृष्णः भीमादिभिः कारयामासः।

भक्तैः एतेषु सप्तसु दिनेषु गृह्यमाणाः वेषाः एवं भवन्ति। प्रथमदिने बैरागिवेषः, द्वितीयदिने 'बण्ड' वेषः तृतीयदिने 'तोटि' वेषः, चतुर्थदिने 'दोर' वेषः पञ्चमदिने 'सुन्नं कुण्डलु मोसे' वेषः, षष्ठदिने 'मातङ्गि' वेषः सप्तम दिने 'सत्पटाल' वेषः।

एवं सप्तसु दिनेषु विभिन्नान् वेषान् धृत्वा गंगम्मदेवतायै भिन्नानि नैवेद्यानि अपि समर्प्य गङ्गम्मानुग्रहपात्राणि भवन्ति। अस्माकं उपर्यपि तस्यः देवतायाः अनुग्रहः भवतु इति तां प्रार्थयामः।

।।सर्वे जनाः सुखिनो भवन्तु।।



- जि.विद्यावती
चरवाणी -
८६८६१३१८३३



# मुमुक्षुणा व्यवहर्तव्यविधानम्



- डा.के. सूर्यनारायण रेड्डी
चरवाणी - ८१०६५७८२५०

वैराग्यपूर्वकं यथार्थम् आत्मज्ञानमावश्यकम्। वैराग्यप्राप्तये भोगविरक्तिः, वस्तुषु पुण्यादिषु लाभापेक्षाराहित्यं, लोकगौरवकीर्तिकाङ्क्षाराहित्यम्, ऐहिकसुखेषु सहजवैराग्यभावना आवश्यकी। तत्त्वज्ञानात् मनोमालिन्यप्रक्षालनं, सृष्टिलक्षणज्ञानं मोक्षलक्षणपरिपूर्णज्ञानं, जीवन्मुक्तिविदहेमुक्तिज्ञानम् च प्राप्यते।

परमात्मा, चैतन्यं, प्रकाशः चित्प्रकाशः इत्येतानि परमात्मनः नामान्येव। परमात्मनः एव अनन्तकोटिब्रह्माण्डानि उद्भूतानि, तस्मिन् एव लीनानि च भवन्ति। आकाशस्य, साधारणाकाशः, मायाकाशः, चिदाकाशः इति आकाशत्रयज्ञानमावश्यकम्। पञ्चभूतेषु आकाशः सूक्ष्मतमः। समस्तसृष्टिवस्तूनि बाह्याकाशे वर्तन्ते। तानि सर्वाण्यपि मानसाकाशेः परिवर्तन्ते। मनसः अपि मनोधारक- आत्मचैतन्यं सूक्ष्मं चिदाकाशः एव।

प्राणौ मृते इन्द्रियाणि प्राणेषु, प्राणाः तेजसि, तेजः आकाशे आकाशः परमात्मनि लीनो भवति। मानसाकाशे पूर्वजन्मवासनाशेषे पुनर्जन्म सम्भवति। सर्वोऽपि प्रपञ्चः पूर्वजन्ममनसः सृष्टिरेव। अतः प्रपञ्चः एव मनोराज्यमिति व्यवहरन्ति। वासनापरिणामतः एव अभिमानान्यपि परिणमन्ति। जीवन्मुक्ताः व्यासवसिष्ठादयः परिपूर्णपरमात्मज्ञानात् लोकोपदेशार्थम्

मुमुक्षुत्वं नाम तीव्रमोक्षकाङ्क्षा। मुमुक्षोः साधनसम्पत्तेः उपयोज्यं, ज्ञानमत्यावश्यकम्। मुमुक्षुषु शुकमहर्षेः ज्ञातव्यांशः शाश्वतशान्तिः। संसारवासनापरिहारोपायः एकएव शुद्धचैतन्यमद्वितीयमिति, भ्रान्तिजन्याः अयं संसारः, श्रुतिविचारणम् इति कर्मपरिपाकस्थूलसूक्ष्मशरीरज्ञानं ''तरति शोकमात्मवित्'' इत्युक्तरीत्या आत्मतत्त्वज्ञानम्। शुद्धचैतन्यं सर्वत्रव्याप्तं सत्यमिति तदेवाहमिति ज्ञानं सकामकर्मवासनापूर्णे मनोनाशने कृते संसारभ्रमनाशः स्यात् इति ज्ञानसम्पादनमावश्यकम्।

महर्षिः जनकोऽपि ''स्वसङ्कल्पवशाद् बद्धो निस्सङ्कल्पश्च विमुच्यते'' इति मोक्षोपायं शुकाय प्रोक्तवान्। शुकोऽपि मनोलयं कृत्वा दशवर्षसहस्रपर्यन्तं निर्विकल्पसमाधौ स्थितवान्। ''वासनातानवं राम! मोक्ष इत्युच्यते बुधैः'' (यो.वा.२.५) पदार्थवासनादार्ढ्यं बन्ध इत्यभिधीयते इति। विश्वामित्रेणापि रामाय उपदिष्टम्।

अहङ्कारममकारसंसारबन्धरहिताः योगसाधनैः कल्पे कल्पे जायन्ते। आत्मज्ञानप्राप्त्यनन्तरमपि योगबलेन जीवन्मुक्ताः व्यासादिवज्जन्म स्वीकृत्य अन्ते चतुर्मुखब्रह्मणः शरीरं, धरन्ति। शुकस्य व्यासवत् लोकोद्धारणावश्यकभावात् निर्विकल्प - समाध्यनन्तरं विदेहमुक्तो बभूव।

**मोक्षप्राप्तिः -** मायया स्वर्गनरकेषु जीवानां भ्रमणं प्रचलत्येव मायानाशाय जीवानां भ्रमणं प्रचलत्येव। यः मायानाशाय तीव्रप्रयत्नं करोति तस्य मोक्षप्राप्तिः सम्भवति, तन्मोक्षार्थं पुरुषप्रयत्नः अवश्यं कर्तव्य एव। मुमुक्षोः पुरुषप्रयत्नः आदिमः। आत्मविचारणं च द्वितीयः। १.शमः, २. आत्मविचारणं, ३. सन्तोषः, ४. सत्सङ्गः एतेषां चतुरंशानां प्राप्तौ आत्मविचारणं फलवत् स्यात्।

शमो नाम शान्तिप्रदायकः गुणः, आत्मविचारणं नाम आत्मतत्त्वमननम्। सन्तोषो नाम - ऐहिककष्टसुखानां सन्तोषेण स्वीकरणम्। सुखेषु अनासक्तिः। सत्सङ्गो नाम सत्पुरुषाश्रयः। आत्मविचारणे दृष्टान्तानां सम्यक् ज्ञानम् आवश्यकम्। एतत्फलतया

**देहात्मज्ञानवत् ज्ञानं देहात्मज्ञानबाधकम्।**
**आत्मन्येव भवेद्यस्य स नेच्छन्नपि विमुच्यते॥**
**- (यो.वा२०-१५)**

परमात्मा अहमेव इति ज्ञानं यस्य कस्यापि वसिष्ठप्रोक्त मुमुक्षुव्यवहारविषयबोधानन्तरम् अवश्यं सम्भविष्यति।

**पुरुषप्रयत्नः -** शास्त्रीयकृषिप्रयत्नः मोक्षार्थम् आवश्यकः। पुरुषप्रयत्नेषु उच्छास्त्रं परित्यज्य शास्त्रबद्धः पुरुषप्रयत्नः कर्तव्यः। प्राक्तनपुरुषार्थम् अधः कृत्वा अद्यतनपुरुषार्थः बलीयः कार्यः -

**प्राक्तनपुरुषार्थोऽसौ मां नियोजयतीतिधीः।**
**बलादधस्पधीकार्या प्रत्यक्षादधिका न सा॥**
**- यो-५, वा-१.**

प्राणत्यागपर्यन्तं पुरुषप्रयत्नः सर्वदा कार्यः साधनं शरीरं नश्वरं इति दिनेदिने स्मर्तव्यम्। सत्पुरुषस्नेहः, सद्ग्रन्थपठनमावश्यकम्। ऐहिकसुखमशाश्वतमिति मन्तव्यम्।साधकेन पुरुषेण पुरुषप्रयत्नेन साधनचतुष्टयसम्पत्तिः सम्पाद्या। विवेकशास्त्रविचारसत्सङ्गत्या साकम् आत्मविद्याप्रवेशयोग्यताप्रसाधकमेव साधनचतुष्टयम्-

१. नित्यानित्यवस्तुविवेकः, २. इहामुत्रफलभोगविरागः, ३. शमदमादिषट्कसम्पत्तिः, ४. मुमुक्षुत्वम्

**१. नित्यानित्यवस्तुविवेकः -** प्रपञ्चे नित्यवस्तु किम् अनित्यवस्तु किं इति विमर्शात् प्राप्तं ज्ञानं नित्यानित्यवस्तुविवेक इति कथ्यते। भूतभविष्यद्वर्तमानकालेषु अविच्छिन्नं यद्वस्तु स्यात् तन्नित्यवस्तु। यद्वस्तु त्रिकालेषु नास्ति तत् अनित्यवस्तु। एवं सदालोचनात् परब्रह्म सत्यं नित्यवस्तु इति ज्ञायते। ब्रह्मसत्यं जगन्मिथ्या एवं वेदशास्त्रपुराणस्मृतयः वदन्ति।

**२. इहामुत्रफलभोगविरागः -** इहपरलोकसुखवैराग्यम्। अभिरुचिकरवस्तुषु वैराग्यमावश्यकम् इहलोकसुखानि अन्ते दुःखप्रदानि। परलोकसुखान्यपि अशाश्वतान्येव। तीव्रेच्छा राहित्यमेव वैराग्यम्।

**३. शमदमादिषट्कसम्पत्तिः -** शमः दमः उपरतिः तितिक्षा, श्रद्धा, समाधानानि। एतेषां सिद्धिः सम्पादनीया। शमो नाम अन्तरिन्द्रियनिग्रहः। दुरालोचनाप्रवाहं निरुद्ध्य सद्विषयभावनास्थिरस्थापनमेव शमः। तीव्रमनोबलयुताः सङ्कल्पबलेनैव शमं साधयन्ति। इतरे दमेन शमं साधयन्ति।

दमः दमो नाम बहिरिन्द्रियनिग्रहः। पूर्वजन्मवासनया मनसि कामाः प्रविशन्ति। तदा शास्त्रीयपद्धत्या तेषां दमनं कर्तव्यम्। तेषु कामेषु मनसः निरोधः कर्तव्यः। दमः श्रद्धाविश्वासाभ्यां करणीयः।

(अनुवर्तिष्यते)

- श्री विजया भट्
चरवाणी - ५१०३९६०८९३

# सन्तोषस्य रहस्यम्

अथैकदा सृष्टिकर्ता ब्रह्मदेवः मानवम् आहूय अकथयत् - ''हे मानव! मया त्वं सृष्टः। तवेच्छापूरणं हि मे आद्यं कर्तव्यम्। मत्तः किम् अपेक्षसे त्वम्? वद, सर्वं पूरयिष्यामि'' इति। हृष्टो जातः मानवः बद्धाञ्जलिः सन् - ''अहो प्रभो! यथा मे जीवनं शान्तिमयं सुखमयं च भवेत् तथा करोतु। अपि च सर्वे मम प्रशंसां सर्वदा कुर्युः'' इति प्रार्थनाम् अकरोत्।



तावता ब्रह्मदेवः - ''अवश्यं मया पूर्यन्ते तवेच्छाः। शृणु सावधानम् । अत्र दास्यामि गोणीद्वयम्। एकस्यां गोण्याम् अन्येषां दुर्गुणाः सन्ति। अस्याः गोण्याः मुखं पिधाय तव पृष्ठगतां करोतु। कदापि तस्याः अन्तं मा पश्य। तस्याः विषये अन्यान् किञ्चिदपि मा वद। अपरस्यां गोण्यां सन्ति तवैव दुर्गुणाः। तस्याः गोण्याः मुखम् उद्घाटितमेव भवतु सर्वदा। अपि च तव पुरतः एव सदा भवतु। पौनःपुन्येन पश्यन् अग्रे गच्छ। सर्वं सुष्ठु भवेत्'' इति आदिशत्। हर्षोत्कर्षेण मानवः - ''धन्योऽस्मि। खल्विदं मे भाग्यं त्वया अहं सृष्टः'' इति ससन्तोषम् उक्त्वा ब्रह्माणं नमस्कृत्य गोणीद्वयमाधाय सरभसं प्रातिष्ठत।

यथा ब्रह्मणा उक्तं तथैव सः अन्येषां दुर्गुणभरितगोण्याः मुखं सम्यक् पिधाय तां पृष्ठगतां कृत्वा स्वस्य दुर्गुणैः पूरितां गोणीं पुरतः संस्थाप्य प्रस्थितः। मार्गे मानवः स्वस्य दुर्गुणभरितगोण्याः मुखं पिधाय पृष्ठे संस्थाप्य

अन्येषां दुर्गुणैः पूरितां गोणीं पुरतः स्थापितवान्। तदनु गोण्याः मुखम् उद्घाट्य मुहुर्मुहुः अन्तः पश्यन् अन्येभ्यः दर्शयन् तेषां विषयांश्च वदन् अगच्छत्। हन्त! एवं कुर्वतः तस्य न केनापि स्तुतिः कृता। परं तस्य दूषणे एव सर्वे जनाः तत्पराः आसन्। तस्य मनःशान्तिः सर्वथा नष्टा अभवत्। ''ब्रह्माणं शान्तिं सुखं च कल्पयितुं याचिते सति कथमेवं जातम्? मया कः दोषः कृतः?'' इति बहुधा सः व्यलपत्। अन्ते तीव्रतरः चिन्ताक्रान्तः सन् उदश्रुः सः ब्रह्माणम् उपेत्य समस्याम् अश्रावयत् - ''हे देव! मया शान्तियुतं सुखमयं च जीवनं प्रार्थितम्। परं कथमेवं मनःशान्तिः नष्टा? अधुना मम जीवनम् अशान्तिकरम् अस्ति। कृपया मार्गं दर्शयतु'' इति। एवम् अनुयुक्तः ब्रह्मदेवः प्रहसन् प्रत्यवदत् - ''हे पुत्र! मया सम्यक् एव आशिषा अनुगृहीतम् आसीत्। परन्तु यथा मया प्रोक्तं तथा नैवाचरितं त्वया ननु? त्वया गोणिद्वयस्य स्थानं विपर्यस्तं किल?.... तस्य फलमेतत्'' इति।

तावता मानवेन स्वदोषः ज्ञातः। लज्जया सः ब्रह्माणं नमस्कुर्वन् अवदत् - ''हे देव! क्षमां याचे। प्रमादः कृतः। अग्रे मार्गं दर्शयतु'' इति।

क्षणं यावत् तौ नीरवौ आस्ताम्। तदनु ब्रह्मणा औद्यत - ''आदौ मया यत् प्रोक्तं तत् अनुसर। अन्येषां दुर्गुणभरितां गोणीं सर्वदा तव पृष्ठगतां कुरु। कदापि मा पश्य। तव दुर्गुणभरितगोणीं पुरतः संस्थाप्य सकृत् पश्यन् जीवतु। विसंशयं सर्वैः त्वं श्लाघ्यसे आद्रियसे च'' इति।



''स्वदोषावगूहनं परदोषपर्वतीकरणञ्च चित्तशान्त्यपहारकौ''



ॐ श्रीमहालक्ष्मै च विद्महे विष्णुपत्नै।
च धीमहि तन्नो लक्ष्मीः प्रचोदयात्।।

ॐ यक्षाय कुबेराय वैश्रवणाय
धनधान्याधिपतये धनधान्यसमृद्धिं
मे देहि दापाय स्वाहा।



श्रीशङ्कराचार्यविरचित

# कनकधारास्तोत्रम्

अङ्गं हरेः पुलकभूषणमाश्रयन्ती
भृङ्गाङ्गनेव मुकुलाभरणं तमालम्।
अङ्गीकृताखिलविभूतिरपाङ्गलीला
माङ्गल्यदास्तु मम मङ्गलदेवतायाः॥१॥

हरेः अन्तः रमणीया अलङ्कारवत् वसन्तीं, कृष्णतमालवृक्षस्य अर्धविवृतानि अङ्कुराणि तस्मै दृष्ट्वा भृङ्गवत् आकृष्टा, स्वस्य गुञ्जनशब्देन अलङ्करोति, लक्ष्मीमात्रे नमस्कारः। या सर्वलोकविश्वं धारयति दिव्यदृष्ट्या धनवृष्टिं करोति। तस्याः कटाक्षं मम जीवने मङ्गलं समृद्धिं च जनयतु।

मुग्धा मुहुर्विदधती वदने मुरारेः
प्रेमत्रपाप्रणिहितानि गतागतानि।
मालादृशोर्मधुकरीव महोत्पले या
सा मे श्रियं दिशतु सागरसम्भवायाः॥२॥

हरेः मुखे यस्याः दृष्टिः तिष्ठति तस्यै लक्ष्म्यै नमस्कारः। तस्या मुखेन मुग्धा तस्याः दृष्टिः प्रेम्णा लज्जया च परिपूर्णा भवति, यदा ताः पुनः पुनः तस्याः मुखं प्रति आगच्छन्ति। तस्य नेत्राणि मधुमक्षिका इव महतः जलकुमुदं परितः भ्रमन्ति। क्षीराब्धोद्भवा मे सौभाग्यपूर्णदृष्टिः प्रयच्छतु।

विश्वामरेन्द्रपदविभ्रमदानदक्ष-
-मानन्दहेतुरधिकं मुरविद्विषोऽपि।
ईषन्निषीदतु मयि क्षणमीक्षणार्थ-
- मिन्दीवरोदरसहोदरमिन्दिरायाः॥३॥

राजराजपदवीं वा इन्द्रोन्नतपदं वा क्षणमात्रेण महालक्ष्मीः ईक्षणेन अप्रयत्नेन ददाति। मुरारिः (विष्णु) परमानन्द एव तेन सुखी क्रियते। लक्ष्म्याः नील-कमल-नेत्रेभ्यः अयं कटाक्षः क्षणं न्यूनातिन्यूनं मम उपरि पततु।

आमीलिताक्षमधिगम्य मुदा मुकुन्द-
मानन्दकन्दमनिमेषमनङ्गतन्त्रम्
आकेकरस्थितकनीनिकपक्ष्मनेत्रं
भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः॥४॥

मुकुन्दस्य नेत्राणि आनन्देन निमीलितानि तिष्ठन्ति। लक्ष्म्याः सुन्दरे नेत्रे प्रेमविस्मयेन मुकुन्दे निहिते तिष्ठतिः, निमिषं विना मुक्ते तिष्ठतः च। एतो महालक्ष्मीनयनो मयि पततां श्रियं सुखं च मे यच्छतात्।

कालाम्बुदालिललितोरसि कैटभारे-
र्धाराधरे स्फुरति या तटिदङ्गनेव।
मातुस्समस्तजगतां महनीयमूर्तिः
भद्राणि मे दिशतु भार्गवनन्दनायाः॥५॥

महाविष्णोः कृष्णविस्तृतवक्षःस्थले महालक्ष्मीः कृष्णवृष्टिमेघप्रकाशकविद्युद्रेखा इव अस्ति सर्वैः मातृत्वेन पूजिता, भार्गवमुनिसुता सा मे मङ्गलम् आनयतु।



बाह्वन्तरे मधुजितः श्रितकौस्तुभे या
हारावलीव हरिनीलमयी विभाति।
कामप्रदा भगवतोऽपि कटाक्षमाला
कल्याणमावहतु मे कमलालयायाः॥६॥

कौस्तुभामालविभूषितवक्षःस्थलः भगवान् विष्णुः महालक्ष्मीदेव्याः सुन्दरदृष्टिशृङ्खलया अपि अलङ्कृतः। इयं कटाक्षस्त्रक् कटाक्षं इन्द्रनीलस्य बहुमूल्यनीलपाषाणहारसदृशं हरेः एव सर्वकामानां पूर्तये समर्थाः सन्ति। इयं कटाक्षमाला मम मङ्गलं जनयेत्।

प्राप्तं पदं प्रथमतः खलु यत्प्रभावा-
-न्माङ्गल्यभाजि मधुमाथिनि मन्मथेन।
मय्यापतेत्तदिह मन्थरमीक्षणार्थं
मन्दालसं च मकरालयकन्यकायाः॥७॥

प्रेमदेवः मन्मथः मधुसूदनस्य (मधुसुरस्य नाशकस्य अर्थात् विष्णोः) प्रवेशं प्राप्तुं शक्नोति स्म केवलं यतोहि सः महालक्ष्म्याः आशीर्वाददृष्ट्या अनुग्रहितः आसीत्, तस्याः शुभा आलस्यपार्श्वदृष्टिः मयि पततु (क्षणं न्यूनातिन्यूनं मां गच्छन्तीव पश्यन्ती समृद्ध्या आशीर्वादं ददातु)।

दद्याद्दयानुपवनो द्रविणाम्बुधारा -
यस्मिन्न किञ्चन विहङ्गशिशौ विषण्णे।
दुष्कर्मधर्ममपनीय चिराय दूरं
नारायणप्रणयिनीनयनाम्बुवाहः॥८॥

वर्षावायुभिः चालिताः कृष्णाः वर्षामेघाः शुष्कभूमौ वर्षं मुञ्चन्ति, चटकपक्षिणः तृष्णां च शामयन्ति, पृथिव्यां च समृद्धिं जनयन्ति। एवमेव महालक्ष्मीकृष्णाक्षिणः करुणावायुप्रवाहितवर्षामेघसदृशाः अस्याः सञ्चितपापभारेन आहतस्य चटकपक्षिभक्तस्य समृद्धिवृष्टिं मुञ्चन्तु येन पापानि प्रक्षालितानि भवन्ति, तस्मै समृद्धिः प्रदत्ता भवति।

इष्टा विशिष्टमतयोऽपि यया दयार्द्र
दृष्ट्या त्रिविष्टपपदं सुलभं लभन्ते।
दृष्टिः प्रहृष्ट कमलोदरदीप्तिरिष्टां
पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः॥९॥

स्वर्गादयः उच्चतराः लोकाः, येषां कृते अश्वमेधादिमहायज्ञाः क्रियन्ते, ते महालक्ष्मी-नयन-कमल-करुणा-पूर्ण-दृष्ट्या सुगमाः भवन्ति। यथाहृदयकामान् प्राप्नुयाम् तथा मां सा पश्यतु।

गीर्देवतेति गरुडध्वजसुन्दरीति
शाकम्भरीति शशिशेखरवल्लभेति।
सृष्टिस्थितिप्रलयकेलिषु संस्थितायै
तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै॥१०॥

नारायणपत्नीं त्रिलोकगुरुं देवीं महालक्ष्मीं नमामि। सा विविधरूपेण वर्तते, सरस्वती विद्यादेवता, महाविष्णोः दिव्यपत्नी लक्ष्मी, शाकम्भरी वा भगवती महेश्वरपत्नी पार्वती इति प्रसिद्धा अस्ति। सा एव खलु जगतः सृष्टौ, रक्षणे अन्तिमविनाशे च लीलापूर्वकं प्रवृत्ता अस्ति।

श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै
रत्यै नमोऽस्तु रमणीयगुणार्णवायै।
शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै
पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै॥११॥

वेदव्यक्तित्वेन देवि कर्मफलं प्रयच्छसि। रतिदेवी इव रूपसुन्दरी त्वं अतिशयसुन्दरगुणसमुद्र एव असि। शतदलसुन्दरपद्मनिवासं कृत्वा शक्तिमूर्तिः, पुरुषोत्तमपत्नी त्वम् असि। मम नमांसि गृहाण।

नमोऽस्तु नालीकनिभाननायै
नमोऽस्तु दुग्धोदधिजन्मभूम्यै।
नमोऽस्तु सोमामृतसोदरायै
नमोऽस्तु नारायणवल्लभायै॥१२॥



हे नारायणपत्नी! यस्याः मुखं
पुष्पितपद्मसदृशं तां
प्रणमाम्यहम्। क्षीरसागरात्
चन्द्रेण दिव्यमृतेन सह जाता
देवि! तुभ्यं नमः।

नमोऽस्तु हेमाम्बुजपीठिकायै
नमोऽस्तु भूमण्डलनायिकायै।
नमोऽस्तु देवादिदयापरायै
नमोऽस्तु शार्ङ्गायुधवल्लभायै॥१३॥

सुवर्णकमलसंस्थितां देवीं भूमेः
नायिकां नारायणपत्नी
देवकरुणां प्रणमामि।

नमोऽस्तु देव्यै भृगुनन्दनायै
नमोऽस्तु विष्णोरुरसि स्थितायै।
नमोऽस्तु लक्ष्म्यै कमलालयायै
नमोऽस्तु दामोदरवल्लभायै॥१४॥

दामोदरपत्न्यै भृगुपुत्र्यै नमोऽस्तु ते।
कमलस्थितायै
महाविष्णुविस्तृतवक्षसि भूषितायै
लक्ष्म्यै नमोऽस्तु ते।

नमोऽस्तु कान्त्यै कमलेक्षणायै
नमोऽस्तु भूत्यै भुवनप्रसूत्यै।
नमोऽस्तु देवादिभिरर्चितायै
नमोस्तु नन्दात्मजवल्लभायै॥१५॥

त्वां प्रकाशरूपां प्रणमाम्यहम् नयने ते
पद्मपत्रवत्। त्वया जगत् सृष्टं समृद्धिप्रदा।
त्वं नन्दपुत्रस्यः कृष्णस्य पत्नी, देवैः
पूजिता। नमस्कारं स्वीकरोतु।

सम्पत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानविभवानि सरोरुहाक्षि।
त्वद्वन्दनानि दुरितोद्धरणोद्यतानि
मामेव मातरनिशं कलयन्तु नान्ये॥१६॥

अम्बे! तव वन्दनानि इन्द्रियाणां समृद्धि
यच्छन्ति, आनन्दं ददति, पद्मनेत्रे!
सम्राज्यं ददति, तादृशानि मातः! मां सदा
कलयन्तु।

यत्कटाक्षसमुपासनाविधिः
सेवकस्य सकलार्थसम्पदः।
सन्तनोति वचनाङ्गमानसैः
त्वां मुरारिहृदयेश्वरीं भजे॥१७॥

तव कटाक्षं पूजयति भक्तः
धनसमृद्ध्या धन्यः भवति। या राज्ञी
विष्णुहृदये आधिपत्यं मम वचसा,
शरीरेण, मनसा तव प्रणामाः।

सरसिजनिलये सरोजहस्ते
धवलतमांशुकगन्धमाल्यशोभे।
भगवति हरिवल्लभे मनोज्ञे
त्रिभुवनभूतिकरि प्रसीद मह्यम्॥१८॥

कमले उपविष्टा कमलकुसुमहस्ता
श्वेतवस्त्रमालाचन्दनविभूषिता, त्वं नः हृदयं
प्रसादय। विष्णुपत्नी त्वं त्रैलोक्यसमृद्धिदात्री
मयि दयां कुरु।

दिग्घस्तिभिः कनककुम्भमुखावसृष्ट
स्वर्वाहिनी विमलचारुजलप्लुताङ्गीम्।
प्रातर्नमामि जगतां जननीमशेष
लोकाधिनाथगृहिणीममृताब्धिपुत्रीम्॥१९॥

हे सर्वलोकमातः विश्वनाथविष्णुपत्नी,
दिग्गजाः (विविधदिशं रक्षन्तः
आकाशगजाः) त्वां प्रतिदिनं देवगङ्गायाः
जलेन स्नापयन्ति सुवर्णपात्रेभ्यः पातितेन।
क्षीरोदधिकन्ये त्वां प्रणमाम्यहम्।



कमले कमलायताक्षवल्लभे त्वं
करुणापूरतरङ्गितैरपाङ्गैः।
अवलोकय मामकिञ्चनानां
प्रथमं पात्रमकृत्रिमं दयायाः॥२०॥

हे कमलनेत्रमहाविष्णुपत्नी लक्ष्मीः
देवी करुणापूर्णा दृष्टिः मयि,
निर्धनानाम् दरिद्रतमे तव भक्ते
निर्दिशतु, येन अहं तव
करुणालाभानां सच्चिदानन्दग्राही
भवेयम्।

स्तुवन्ति ये स्तुतिभिरमूभिरन्वहं
त्रयीमयीं त्रिभुवनमातरं रमाम्।
गुणाधिका गुरुतरभाग्यभाजिनो
भवन्ति ते भुवि बुधभाविताशयाः॥२१॥

ये वेदमूर्तेः जगन्मातुः महालक्ष्म्याः स्तुतिं
गायन्ति ते सर्वैः सद्गुणैः अतुलनीयैः
सौभाग्यैः बुद्धिशक्तिभिः च धन्याः
भविष्यन्ति येन विद्वद्भ्यः अपि स्तुतिः
अर्जयिष्यन्ति।

सुवर्णधारास्तोत्रम् यच्छङ्कराचार्यनिर्मितम्।
त्रिसन्ध्यं यः पठेन्नित्यं स कुबेरसमो भवेत्॥२२॥

शङ्करभागवतपादाचार्यविरचितं
कननकधरस्तोत्रं यः प्रातः मध्याह्ने,
सायंकालेषु पठेत्, सः कुबेरस्य
नवसिरवोरनायकस्य समः भवितुम् अर्हति ।

## गद्यम्

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ कनकधारास्तोत्रम् सम्पूर्णम्।

सम्प्रयुक्तः परमहंसपरिव्राजकाचार्यवर्यस्य
श्रीशङ्कर भगवत्पादस्य इदं
कनकधारा स्तोत्रं समाप्तम्।
भाषोद्धारकः श्रीवातिळ्ळवर्याः
तेषां कनकधाराग्रन्थेषु प्रचुरिता
अधिकपाठश्लोकाः अत्र विद्यन्ति।

बिल्वतवी मध्यसत्सरोजे
सहस्रपात्रे सुखसन्निविष्टम्,
अष्टपदम्भोरुह पाणिपदं
सुवर्णवर्णं प्रणामामी लक्ष्मीं।

बिल्वाटवीमध्यलसत्सरोजे सहस्रपत्रे
सुखसन्निविष्टाम्।
अष्टापदाम्भोरुहपाणिपद्मां
सुवर्णवर्णां प्रणमामि लक्ष्मीम्॥

कमलासनपाणिना ललाटे
लिखितामक्षरपङ्क्तिमस्य जन्तोः।
परिमार्जय मातरङ्घ्रिणा ते
धनिकद्वारनिवास दुःखदोग्ध्रीम्॥

अस्य कृपणस्य ललाटे ब्रह्मणा लिखितं लेखनं
पादैः मार्जयतु, धनिकजनानाम् सम्मुखे दहतु
इति। माता! श्री महालक्ष्मी!

अम्भोरुहं जन्मगृहं भवत्या
वक्षःस्थलं भर्तृगृहं मुरारेः।
कारुण्यतः कल्पय पद्मवासे
लीलागृहं मे हृदयारविन्दम्॥

अम्बे! तव गृहं पद्मम् अस्ति। भर्तृगृहं
श्रीमन्नारायणस्य वक्षःस्थलम्। तथैव मातः! मम
करुणापूर्वकं हृदयकमलं क्रीडाङ्गणं कुरु।



श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमेता

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

श्लो.१२

श्रीदेव्याः कमनीयहारतरले देवोऽथ तत्कौस्तुभे
सा चेति स्फुटबिम्बिनौ वृषमहाभूभृद्विहारोत्सुकौ।
अन्योन्यं निजमानसे दृढतरध्यानावबद्धाकृती
भूयास्तां प्रतिभासिताविव बहिर्दिव्यौ युवानौ श्रियै॥

ता - श्रीमच्छेषाचलविहाररसिकौ नित्ययौवनौ दिव्यौ अलर्मेल्मङ्गाश्रीनिवासश्च विहारसमये एकदा परस्पराभिमुखतया स्थित्वा विहरन्तौ आस्ताम्। तदा श्रीदेव्याः कण्ठसीमनि विराजमानस्य विमलमुक्ताहारस्य मध्ये ग्रथिते सुरुचिरे नायकमणौ श्रीनिवासस्य प्रतिबिम्बः प्रकाशते स्म। तथैव स्वामिनो वक्षःस्थले विभूषिते कौस्तुभमणौ पुरस्थितायाः लक्ष्मीदेव्याः प्रतिबिम्बश्च सन्दृश्यते। एवं तयोः प्रतिबिम्बद्वयं कमलाया हृदये स्मर्यमाणस्य श्रीवेङ्कटेशस्य मूर्तिः हारमणिद्वारा, एवं गोविन्दस्य मानसे परिवर्तमानायाः श्रीदेव्याः मूर्तिः कौस्तुभमणिद्वारा च बहिः प्रतिभासते इवास्ति। परस्पर



प्रेमनिर्भरस्वान्तौ तौ श्रीश्रियःपती मे श्रेयः अनुगृह्णाताम्।

सु.सौ.व्याख्या - शेषाद्रिशेखरविभोः दिव्यमहिषी -परिजनादिप्रस्तुत्यनन्तरम् अस्मिन् श्लोके पद्मावतीसमेतस्य तस्य देवादिदेवस्य वेङ्कटाचलविहारवैभवः प्रस्तूयते।

हारतरले देवः, कौस्तुभे सा - श्रीदेव्याः कण्ठभूषायाः मुक्तावल्याः मध्यस्थे प्रधानमणौ तत्पुरस्स्थितः स्वामी प्रतिबिम्बितो भवति। हारो नाम मुक्ताहारः। "हारो मुक्तावलीं अमर २.६.१०५. तरलो हारमध्यमणिः।" तरलो हारमध्यगः" अमर २.६.१०२. एवं माधवस्य हृदयदेशे अलङ्कृते कौस्तुभमणौ तस्य अभिमुखे तिष्ठन्ती रमा च प्रतिबिम्बिता भवति। तथा च तौ प्रतिबिम्बौ तयोः स्वकीय-हृदयस्थित-परस्परमूर्ती एव एवं हारमणिकौस्तुभमणिद्वारा बहिः प्रकाशेते इति भावः। तौ दिव्यदम्पती सदा अन्योन्यहृदये परिवर्तमानौ अभूताम् इति तयोः अनुरागातिशयं वाल्मीकिमहर्षिः एवम् अभिवर्णयति -

"मनस्वी तद्गतस्तस्या नित्यं हृदि समर्पितः" रामा १.६७.२६ सीतादेवी अनुरागनिर्भरं रामं सर्वदा स्वहृदये निक्षिप्तवती, "तस्य भूयो विशेषेण मैथिली जनकात्मजा" रामा १.६७.२९ रामेणाऽपि जानकी अतिशयितप्रेम्णा स्वहृदये निक्षिप्ता।

एवं रामायणे सुन्दरकाण्डेऽपि हनूमान् तयोः परस्परहृदयानुवर्तनं निरूपितवान् -

"अस्या देव्या मनस्तस्मिन् तस्य चास्यां प्रतिष्ठितम्। ५.१५.५१ - सीतादेव्याः चित्तं रामचन्द्रे, एवं रामस्य मनः तस्यां च निक्षिप्तमभूत्।

श्लोकोऽयं श्रीकृष्णदेवरायविरचिते आमुक्तमाल्यदाह्वये आन्ध्रप्रबन्धरत्ने आद्यपद्यस्य अनुकृतिरूप इति एतत् स्तुतिकारैः स्वयमेव निगदितम् - तच्च पद्यमिदम् -

**श्रीकमनीयहारमणि जेन्नुग दानुनु गौस्तुभंबुनं**
**दा कमलावधूटियु नुदारत दोप बरस्परात्मलं**
**दाकलितंबुलैन तम याकृतु लच्छत बैकि दोचि य-**
**स्तोकत नंदु दोचे नन शोभिलु वेङ्कटभर्त गोल्येदन्।।**

**- आमुक्त -१.१.**

श्लोकोऽयं शार्दूलविक्रीडिते वृत्ते निबद्धः।।

(अनुवर्तिष्यते)



## मार्च् २०२४ लघुप्रश्नोत्तरी समाधानानि

१.गङ्गा शन्तनयोः
२.कुन्ती माद्री च
३.नकुलसहदेवौ
४.शन्तनः
५.नैमिशारण्ये
६.उग्रश्रवणः
७.वर्षत्रयम
८.उपरिचरवसुः
९.कुरुवंशीयः
१०.इल महाराजः
११.अभिमन्युः
१२.उत्तरा देवी
१३.श्रीकृष्णः
१४.दशम स्कन्दे
१५.देवकी वसदेवौ



# वेङ्कटेश्वरसुप्रभातस्तोत्र - जगन्नाथसुप्रभात - स्तोत्रयोस्तुलनात्मकमध्ययनम्

- डा.अजयकुमारनन्दः
चरवाणी - ९९६३९१८४११

पुराणप्रथिते उत्कलप्रदेशे नीलाचलधाम वर्तते। तद्धाम्नः अधिष्ठितदेवः श्रीजगन्नाथः भवति। जगन्नाथमाधृत्य अनेकानि काव्यानि काव्यकारैः व्यरचिषत। इदानीमपि विरचयन्ति। भाविन्यपि रचयिष्यन्ति। तेष्वेव काव्यकारेष्वन्यतमः श्रीजगन्नाथसुप्रभातस्तोत्रमञ्जर्याः कर्ता सदाशिवमूर्तिमहोदयः। अयं दाक्षिणात्यः राजवंशसम्भूतश्चासीत्। तथैव सुप्रसिद्धे आन्ध्रप्रदेशे शेषाचलधाम्नि विद्यते। अस्य शेषाचलधाम्नः अधिष्ठितदेवः श्रीवेङ्कटेशः भवति। वेङ्कटेश्वरमाश्रित्य अनेके कवयः स्तोत्रकाव्यनाटकमहाकाव्यादीनि विरचयामासुः। तेष्वेव रचयिष्यमाणेषु कविषु श्रीवेङ्कटेश्वरसुप्रभातस्तोत्रस्य ग्रन्थकर्ता प्रतिवादिभयङ्करमन्नवेदान्ताचारी अन्यतमः भवति।

देवानामुत्थापनाय प्रातःकाले सुप्रभातं क्रियते। सुप्रभातेऽस्मिन् चत्वारः अंशाः दरीदृश्यन्ते। ते अंशाः इत्थं भवन्ति - १. सुप्रभातम् २. स्तोत्रम् ३. प्रपत्तिः ४. मङ्गलाचरणम् अथवा मङ्गलश्लोकी इति।

**१. वेङ्कटेशसुप्रभातस्तोत्रम् -** वेङ्कटेशप्रभातस्तोत्रे विशिष्य सुप्रभाते - २९ सुप्रभातानि सन्ति। स्तोत्रे - ११ स्तोत्राणि सन्ति। प्रपत्तौ - १६ प्रपत्तयः सन्ति। मङ्गले अथवा मङ्गलाचरणे - १४ मङ्गलश्लोकाः सन्ति। सर्वमाहत्य वेङ्कटेशसुप्रभातस्तोत्रे ७० श्लोकाः वर्तन्ते। श्रीजगन्नाथसुप्रभातस्तोत्रे करावलम्बस्तोत्राणि - ७ सन्ति। श्रीजगन्नाथसुप्रभातस्तोत्रे - ९ सुप्रभातानि वर्तन्ते। श्रीजगन्नाथसुप्रभातस्तोत्रे -९ स्तोत्राणि विद्यन्ते। श्रीजगन्नाथप्रपत्तौ - ११ प्रपत्तयः सन्ति। श्रीजगन्नाथमङ्गलश्लोके - १० मङ्गलश्लोकाः सन्ति। मङ्गलश्लोकान्तर्गते कविवंशपरिचये। मङ्गलाचरणम् तत्र स्तोत्रप्रयोजने - १ एकं प्रयोजनम्। सर्वमाहत्य अत्र ४८ श्लोकाः सन्ति। परन्त्वहं केवलं चतुर्षु अंशेषु जगन्नाथसुप्रभातस्तोत्रं स्वीकृतवानस्मि। यत्रैव ९ श्लोकाः वर्तन्ते।

२. रामायणे बालकाण्डे विश्वामित्रस्य प्रबोधश्लोकेन इदं स्तोत्रमारभ्यते। 'कौसल्या सुप्रजा राम पूर्वा सन्ध्यां प्रवर्तते' इति। तदनन्तरं विष्णुपुराणस्थेन श्लोकेन विष्णोः प्रबोधः जायते। तदनु कमलायाः प्रबोधः क्रियते वेङ्कटेशसुप्रभातस्तोत्रे।

३. श्रीजगन्नाथसुप्रभातस्तोत्रे वेदोक्तौङ्कारनादैः नीलमाधवस्य प्रबोधः क्रियते।

**त्रैविष्टमास्सुमनसः प्रणवैर्विरावैः।**
**प्रोद्बोधयन्ति भूवनं भवनर्चनार्यम्।। (ज.सु.स्तो-१)**

४. वेङ्कटेशसुप्रभातस्तोत्रे अल्पसमासः दृश्यते। तत्स्तोत्रे द्वितीयश्लोकेऽवलोक्यते यथा - कमलाकान्तः, गोविन्दः, गरुडध्वजः, इत्यत्र अल्पसमासः। क्वचित्तु दीर्घसमासः तद्यथा - ब्रह्माद्यास्सुरवरास्समहर्ष्यः, तत्र द्वितीयतृतीयश्लोकयोः। सुर्येन्दुभौमबुधवाक्पतिकाव्यशौरी इति तत्स्तोत्रस्य अष्टादशश्लोके दीर्घसमासः परिलक्ष्यते।

जगन्नाथसुप्रभातस्तोत्रे - एलालवङ्गनिधिभासुरोऽयमत्रापि दीर्घसमासः तृतीयश्लोके जगन्नाथसुप्रभातस्तोत्रे अवलोक्यते। आकाशराङ्घनघनैस्सह इत्यत्र जगन्नाथसुप्रभातस्तोत्रे अष्टमश्लोके अल्पसमासः सन्दृश्यते। वेङ्कटेशसुप्रभातस्तोत्रे दीर्घसमासः अल्पं एव। किन्तु जगन्नाथसुप्रभातस्तोत्रे दीर्घसमासः अधिकः दृश्यते।

**५. जगन्नाथसुप्रभातस्तोत्रे अलङ्कारः -** द्वितीयश्लोके बालारुणार्कनवलोहितकान्तिरेषा इत्यत्र रूपकोत्प्रेक्षालङ्कारौ स्तः। तृतीयश्लोके - तरुणीव इत्यत्र उपमालङ्कारः। सप्तमश्लोके प्रज्वलितोज्ज्वलवपुसुरभूसुरोऽग्निः अत्र अनुप्रासालङ्कारः। स्तोत्रेणानेन पुण्येन इत्यत्रापि उदात्तालङ्कारः नीलमाधवत्वात्।

वेङ्कटेशसुप्रभातस्तोत्रे षष्ठश्लोके पञ्चाननाब्जः इत्यत्र अब्जः उपमानम्, पञ्चाननः उपमेयः। अत्रोपमालङ्कारः। अष्ठविंशतिश्लोके संसारसागरः इत्यत्र संसारे सागरस्यारोपणाद्रूपकालङ्कारः। निनादमिव इत्यत्रोपमा। त्रयोदशश्लोके बन्धौ सिन्धौ इत्यत्रापि अन्त्यनुप्रासालङ्कारः। एलालवङ्गघनसारसुगन्धितीर्थ दिव्यवियत्सु हेमपरिपूर्णमित्यत्र उदात्तालङ्कारः। अत्र द्वयोः सुप्रभातयोः उदात्तरूपकोपमानुप्रासोत्प्रेक्षादयः अलङ्काराः नितरामतितरां दृश्यन्ते।

**६. गुणः -** वेङ्कटेशसुप्रभातस्तोत्रे अष्टादशश्लोके विहगराजः मृगराजाधिराजः, नगाधि-राजः, गजराजः, हयाधिराजः, एत्येतेषु शब्देषु समासभूयिष्ठत्वादोजोगुणः भवति। यतो हि ओजो समासभूयिष्ठं इति। अपि च सुर्येन्दुभौमबुधवाक्पतिकाव्यशौरी इत्यत्रापि ओजोगुणः वर्तते।भास्वानुदेति विकसति सरोरुहाणि इत्यत्र अल्पसमासत्वात् प्रसादगुणः।

जगन्नाथतसुप्रभातस्तोत्रे तृतीयश्लोके एलालवङ्कलिकाविधिभासुरेण इत्यत्रोजोगुणः प्रज्वलितोज्वलवपुस्सुरभूसुरोऽयम् इत्यत्र सप्तमश्लोके ओजोगुणः। चतुर्थश्लोके सरसचन्दनगन्धलेपौ इत्यत्र प्रसादगुणः। अतः उभयत्र ओजोगुणप्रसादगुणयोः साम्यता वर्तते।

**७. वेङ्कटेशसुप्रभातस्तोत्रे छन्दः -** कौसल्या सुप्रजा राम इत्यत्र प्रथमश्लोके अनुष्टुप्छन्दः। तव सुप्रभातमरविन्दलोचने इत्यत्र चतुर्थश्लोके तोटकवृतम्। अनेकेषु श्लोकेषु वसन्ततिलकवृत्तं विद्यते। जगन्नाथसुप्रभातस्तोत्रे नीलाद्रिसानुषु मुदा विहारस्त्वमाप्य इति प्रथमश्लोकादारभ्यः अष्टमश्लोकान् यावत् वसन्ततिलकवृत्तम्। स्तोत्रेणानेन पुण्येन सुप्रभाते प्रकीर्तित इत्यत्र नवमश्लोके अनुष्टुप्छन्दः। द्वयोः स्तोत्रयोः छन्दः प्रायशः समानमेव। किन्तु वेङ्कटेशसुप्रभात स्तोत्रे तोटकच्छब्दः एकमेवाधिकं विशिष्यते।

**८. वेङ्कटेशसुप्रभातस्तोत्रपठनस्य फलम् -**

**इत्थं वृषाचलपतेरिह सुप्रभातं ये मानवाः प्रतिदिनं पठितुं प्रवृत्ताः।**
**तेषां प्रभातसमये स्मृतिरङ्गभाजां प्रज्ञां परार्थं सुलभां परमां प्रसूते।।**
(वे.सु.स्तो.७०)

**जगन्नाथसुप्रभातस्तोत्राध्ययनस्य प्रयोजनम् -**

**स्तोत्रेणानेन पुण्येन सुप्रभाते प्रकीर्तितः।**
**भगवान् श्रीजगन्नाथो भाग्यदो मोक्षदो भवेत्।।**
(ज.सु. स्तो.४८)

द्वयोः स्तोत्रयोः प्रयोजनन्तु भाग्यमोक्षपरमगतिप्राप्तिरेव भवति।

**९. वैषम्यता - वेङ्कटेशसुप्रभातस्तोत्रे -** हे! हे! वेङ्कटाचलपते! तव सुप्रभातम् तस्यैव श्लोकेषु पुनरावृतिर्जायते। परन्तु षड्विंशतिश्लोके तिष्ठन्ति वेङ्कटपते। तव सुप्रभातमित्यस्ति।

जगन्नाथसुप्रभातस्तोत्रे हे! नीलमाधव! विभो! तव सुप्रभातम् इत्येवमस्ति। तथैव पुनरावृत्तिः श्लोकेषु दरीदृश्यते। अन्तिमे श्लोके, भगवान् श्रीजगन्नाथः भाग्यदो मोक्षदो भवेत् इत्येवं व्यतिक्रमः परिलक्ष्यते।

**१०. साम्यता -** वेङ्कटेशसुप्रभातस्तोत्रे २५ श्लोके एलालवङ्घनसारसुगन्धितीर्थ इत्येवमस्ति। किन्तु जगन्नाथसुप्रभातस्तोत्रे ३२ श्लोके एलालवङ्ककलिकानिधिभासुरोऽयमित्येवमस्ति। उभयत्र स्तोत्रे एलालवङ्ग इत्यत्र साम्यता विद्यते।

**११.वर्ण्यविषयः -** वेङ्कटेशसुप्रभातस्तोत्रे प्रभातकालिकप्रबोधनं वर्णितम्। परन्तु जगन्नाथसुप्रभातस्तोत्रे नीलमाधवस्य प्रातःकालस्य प्रबोधनं प्रतिपादितम्।

**१२.स्तुत्यदेवः-** वेङ्कटेश्वरसुप्रभातस्तोत्रे-मातस्समस्तजगतामित्यत्र वेङ्कटेश्वरलक्ष्मीदेव्योः स्तुतिः आदौ विहिता। जगन्नाथसुप्रभातस्तोत्रे जगन्नाथस्य स्तुतिः कृता।

**१३. वेङ्कटेशसुप्रभातस्तोत्रे वेङ्कटेश्वरस्य स्तोतारः -**

**त्रैविक्रमादिचरितं बिबुधाः स्तुवन्ति।**
**नारदः भृङ्गा सूर्यघोषः शिवः ब्रह्मा सनन्दनः**
**सप्तगिरिः गङ्गा दिव्यमूर्तिः अवताराः।।**

जगन्नाथसुप्रभातस्तोत्रे जगन्नाथस्य स्तोतारः - विहगः, देवः, ओङ्कारः, सूर्यः, समुद्रः, पवनः, सेवकः, पृथिवी, नदी, वैतालिकः, आकाशः, मेघः इत्येते जगन्नाथदेवं स्तुवन्ति। अतः द्वयोः स्तोत्रयोः स्तोतारः समानाः प्रतिभान्ति।

**१४. प्रयुक्तदिव्यद्रव्याणि -** वेङ्कटेशसुप्रभातस्तोत्रे एलालवङ्ग - घनसार सुगन्धितीर्थ - वियत्सरिज्जल - हेमपूर्णघट - इत्यादीनि दिव्यद्रव्याणि प्रयुक्तानि सन्ति।

**जगन्नाथसुप्रभातस्तोत्रे एलालवङ्ग -** तालिकपत्रदलम्-सरसचन्दन-गन्धलेपन-वारि-नानादिव्यद्रव्याणि प्रयुक्तानि सन्ति।

द्वयोः स्तोत्रयोः भाषा तु संस्कृतभाषा भवति। तथा भारतीवृत्तिरपि भवति। उभयत्र सायुज्यभक्तिरेव वर्णिता वर्तते।

**उपसंहारः -** अतः यदि द्वयोः स्तोत्रयोः तुलना क्रियते तदा ज्ञायते यत् - द्वयोः स्तोत्रयोः किञ्चित्साम्यम्, किञ्चिद्वैषम्यञ्च नितरां विद्यते। यद्वस्तु द्वे स्तोत्रे भगवतः महाविष्णोः खलु भवतः। अतः विष्णवे समर्पणमस्तु।



चित्रकथा

# भक्तानां बाधः चेत्......

तेलुगुमूलम् -डा.कम्पेल्ल रविचन्द्रन्
चित्राणि - तुम्बलि शिवाजी
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८९४३१५०८३३

वेङ्कमाम्बा गृहे स्थित्वा किमपि लिखन्ती अस्ति।

शिष्य! एषा वेङ्कमाम्बा सर्वदा किमपि लिखन्ती वर्तते। किं रे तत् ?

गुरो किमपि कवित्वं इति मन्ये।

ह ह ह ! एषा कवित्वमपि लिखति वा?

हा भवान् न जानाति वा बहु लिखितम् आसीत्।

कथं लिखति इति अहमपि पश्यामि।

मध्यान्तरे कर्मचारी गृहात् अवकर कोशं नीत्वा बहिः गच्छति।

रे अत्रागच्छ अवकरकोशं मां ददातु।

अवकर कोशं नीत्वा वेङ्कमाम्बयाः शिरसि अपातयत्।

अहो अहो कथं अन्यायः।

रे! एतस्य दौष्ट्यमधिकं जातम्। अद्य अस्य प्रभृति अस्य दुष्कार्थं समाप्तं भवेत् ।

अरे अक्राम! अद्य तव पापं समाप्तम्। इतः परं कष्टमेव तव...













वेङ्गमाम्बा तुम्बुरतीर्थं गत्वा योगसाधनं कुरु तत्र कोऽपि नागच्छति।

धन्यास्मि स्वामिन्। धन्यास्मि आपद्भ्यः रक्षति अनाथरक्षक गोविन्द गोविन्द।

लोकाः समस्ताः सुखिनो भवन्तु।

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

बा ल वि नो दि नी



## रसप्रश्नाः

१.रुक्मिणी श्रीकृष्णयोः पुत्रः कः?

२. संहितापाठे अत्युन्नत स्थायी का?

३. ऋष्यश्रुङ्गस्य पिता कः?

४. शौनकादिमुनीनां कः महाभारतकथाश्रावणं अकरोत्?

५. वेदस्य अन्तः किम्?

६.रामायणे ''कौसल्या सुप्रजा राम'' इति श्लोकं कः अवदत्?

(समाधानानि १. प्रद्युम्नः २. धन ३.विभाण्डकः ४.उग्रश्रवणः ५.उपनिषत् ६.विश्वामित्र)




(१. पक्षिणः पादः नास्ति २.मेघः नास्ति ३.खगः नास्ति ४.वृक्षः नास्ति ५. वातायनं नास्ति ६. कुक्कुटः नास्ति ७. सीमा नास्ति)



# लघुप्रश्नोत्तरी



तिरुमलतिरुपतिदेवस्थानानि



२२

इदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासम् इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. दुष्यन्तः कस्य वंशीयः?
२. कः भीष्मस्य स्वच्छन्दमरणवरं दत्तवान्?
३. समुद्रस्य भार्या का?
४. संस्काराः कति?
५. राक्षसाणां गुरुः कः?
६. रसाः कति?
७. पीताम्बरः इति कस्य नाम?
८. सुग्रीवस्य पुत्रः कः?
९. विष्णुसहस्रनामस्तोत्रं कस्मिन् पर्वणि भवति?
१०. गर्भस्थं परीक्षितं कः रक्षितवान्?
११. सुभद्रायाः पुत्रः कः?
१२. कुन्त्याः निजनाम किम्?
१३. कुरुवंशराजधानी का?
१४. नहुषस्य कुमारः कः?
१५.द्रोणाचार्यस्य पुत्रः कः?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२.बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरः मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतॄणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।
९. उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.०५.२०२४ अस्ति।

Subscription Number :
Name :
Mother :
Father :
Address :
Phone Number :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.




## श्री कल्याण वेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः

### 2024, मे 21 तः 29 पर्यन्तम्

**२१.०५.२०२४ भौम्यवासरः**

प्रातः - ध्वजारोहणम् - रात्रौ - महाशेषवाहनम्

**२२.०५.२०२४ सौम्यवासरः**

प्रातः - लघुशेषवाहनम् - रात्रौ - हंसवाहनम्

**२३.०५.२०२४ बृहस्पतिवासरः**

प्रातः - सिंहवाहनम् - रात्रौ - मौक्तिकमण्टपः

**२४.०५.२०२४ भृगुवासरः**

प्रातः - कल्पवृक्षवाहनम् - रात्रौ - सर्वभूपालवाहनम्

**२५.०५.२०२४ मन्दवासरः**

प्रातः - आन्दोलिकायां मोहिन्यवतारः - रात्रौ - गरुडसेवा

**२६.०५.२०२४ भानुवासरः**

प्रातः - हनुमद्वाहनम् - रात्रौः - गजवाहनम्

**२७.०५.२०२४ इन्दुवासरः**

प्रातः - सूर्यप्रभवाहनम् - रात्रौ - चन्द्रप्रभवाहनम्

**२८.०५.२०२४ भौम्यवासरः**

प्रातः - रथोत्सवः - रात्रौ - अश्ववाहनम्

**२९.०५.२०२४ सौम्यवासरः**

प्रातः - चक्रस्नानम् - रात्रौ - ध्वजावरोहणम्




## श्री भूसमेत नारापुर वेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः

### 2024, मे 21 तः 29 पर्यन्तम्

**२१.०५.२०२४ भौम्यवासरः**

प्रातः - ध्वजारोहणम् - रात्रौ - महाशेषवाहनम्

**२२.०५.२०२४ सौम्यवासरः**

प्रातः - लघुशेषवाहनम् - रात्रौ - हंसवाहनम्

**२३.०५.२०२४ बृहस्पतिवासरः**

प्रातः - मौक्तिकमण्टपः- रात्रौ - सिंहवाहनम्

**२४.०५.२०२४ भृगुवासरः**

प्रातः - कल्पवृक्षवाहनम् - रात्रौ - हनुमद्वाहनम्

**२५.०५.२०२४ मन्दवासरः**

प्रातः - आन्दोलिकायां मोहिन्यवतारः - रात्रौ - गरुडसेवा

**२६.०५.२०२४ भानुवासरः**

प्रातः - सर्वभूपालवाहनम् - रात्रौः - कल्याणोत्सवः, गजवाहनम्

**२७.०५.२०२४ इन्दुवासरः**

प्रातः - रथोत्सवः - रात्रौ - अश्ववाहनम्

**२८.०५.२०२४ भौम्यवासरः**

प्रातः - सूर्यप्रभवाहनम् - रात्रौ - चन्द्रप्रभवाहनम्

**२९.०५.२०२४ सौम्यवासरः**

प्रातः - चक्रस्नानम् - रात्रौ - ध्वजावरोहणम्



SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-04-2024 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for
India under RNI No.21138/1970 Postal Regd. No. TRP/154/2024-2026" LICENCED TO POST
WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2024-2026" Posting on 5th of every month.

नारायणवनम्
श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
मे 2024 21 तः 29 पर्यन्तम्